॥श्रीगणेशायनमः॥श्रीगोपीजनवल्लभायनमः॥अखिलागमसंचारिश्रीकृष्णाख्यंपरंमहः॥ध्या
त्वागोवर्धनस्सुधीस्तनुतेन्यायबोधिनीं॥१॥चिकीर्षितस्यग्रंथस्यनिर्विघ्नपरिसमाप्त्यर्थंइष्टदेवता
नमस्कारात्मकंमंगलंशिष्यशिक्षार्थंग्रंथादौनिबध्नाति॥निधायेति॥अथपदार्थान्विभजते॥द्र
व्येति॥तत्रसप्तग्रहणंपदार्थत्वंद्रव्यादिसप्तान्यतमत्वव्याप्यमितिव्याप्तिलाभाय॥ननुशक्तिपदा
र्थस्यअष्टमस्यसत्वात्कथंसप्तैवेति॥तथाहिवन्हिसंयुक्तेंधनादौसत्यपिमणिसंयोगेदाहोनजाय
ते॥तच्छून्येनतुजन्यते॥अतोमणिसमवधानेशक्तिर्नश्यति॥मण्यभावदशायांदाहानुकूलाश
क्तिरुत्पद्यतेइतिकल्प्यते॥तस्माच्छक्तिरतिरिक्तपदार्थइतिचेन्न॥मणेःप्रतिबंधकत्वेनमण्यभावस्य
कारणत्वेनैवनिर्वाहेमणिसमवधानासमवधानाभ्यांअनंतशक्तितत्तध्वंसतत्तत्प्रागभावकल्पनायाः
अन्याय्यत्वात्॥तस्मात्सप्तैवेतिसिद्धं॥द्रव्याणिविभजतेपृथिवीति॥नन्वंधकारस्यदशमद्रव्य
स्यसत्वात्कथंनवैवेति॥तथाहि॥नीलंतमश्चलतीतिप्रतीतेर्नीलरूपाश्रयत्वेनक्रियाश्रयत्वेनच

लद्मकणांगधवं लं ॥ एक देश क्या मणीघ्र कादिर्ई

न्या·बो· वायुंनिरूपयति रूपरहितेति ॥ रूपरहितत्वेसति स्पर्शवत्वंवायोर्लक्षणं ॥ सतिसप्तम्याविशिष्टा-
२ र्थकतयारूपरहितत्वविशिष्टस्पर्शवत्वंवायोर्लक्षणं ॥ विशेषणानुपादानेस्पर्शवत्वमात्रस्यलक्षण
त्वेपृथिव्यादित्रिकेअतिव्याप्तिः ॥तत्रापिस्पर्शवत्वस्यसत्वादतउक्तंरूपरहितेति ॥ विशेष्यानुपादा
नेआकाशादिपंचकेचातिव्याप्तिरतउक्तंस्पर्शेति ॥ अतिव्याप्तिर्नाम ॥ अलक्ष्येलक्षणगमनं ॥
यथा ॥ गोःशृंगित्वंलक्षणमुक्तंचेदलक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापिशृंगित्वस्य
विद्यमानत्वात् ॥ अव्याप्तिर्नाम ॥ लक्ष्यैकदेशावृत्तित्वं ॥ यथा ॥ गोर्नीलरूपवत्वंलक्षणमुक्तंचे
2 त् ॥ लक्ष्यतावच्छेदकाश्रयीभूतश्वेतगविनीलरूपाभावात् ॥२॥ असंभवोनामलक्ष्यमात्रेकुत्रा
पिलक्षणाभावः यथागोरेकशफवत्वंगोसामान्यस्यद्विशफवत्वेनएकशफवत्वाभावात् अति
व्याप्त्यव्याप्त्यसंभवानांनिष्कृष्टलक्षणानि ॥ अतिव्याप्तिस्तुलक्ष्यतावच्छेदकावच्छिन्नप्र राम
तियोगिताकभेदसामानाधिकरण्यं ॥ अव्याप्तिस्तु ॥ लक्ष्यतावच्छेदकसमानाधिकरणात्यंता २

द्रव्यत्वंसिद्धं॥ नचक्लृप्तद्रव्येष्वंतर्भावात् कुतोदशमद्रव्यत्वमिति वाच्यं॥ आकाशादिपंचकस्य नीरूपत्वा
त्वायोरप्यनीरूपत्वान्न तेष्वंतर्भावः॥ तमसोऽनिर्गंधत्वान्न पृथिव्यामंतर्भावः॥ जलतेजसोः शीतो॰
ष्णस्पर्शविरहान्न तयोरंतर्भावः॥ तस्मात्तमसो दशमद्रव्यत्वंसिद्धमितिचेन्न॥ तेजोऽभावेनैवोपप
त्तौ अतिरिक्तकल्पनायांमानाभावात्॥ नचविनिगमनाविरहात्तेजस एव तमोऽभावस्वरूपतास्त्वि
ति वाच्यं॥ तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यांतरकल्पने गौरवात् उष्णस्पर्शरू
पगुणाश्रयतया तेजसो द्रव्यत्वंसिद्धं॥ तमसि रूपमनीतिस्तु भ्रांतिरेव॥ दीपापसरणक्रियायाऽ
वनत्वभानात्॥ गंधवतीति॥ गंधवत्त्वंपृथिव्यालक्षणं॥ लक्ष्यापृथिवी॥ पृथिवीत्वंलक्ष्यतावच्छे
दकं यत्धर्मावच्छिन्नंलक्ष्यं सधर्मो लक्ष्यतावच्छेदकः॥ योधर्मोयस्यामवच्छेदकः तद्धर्मावच्छिन्ना
लक्ष्यता॥ तथाचलक्ष्यतावच्छेदकंपृथिवीत्वंचेल्लक्ष्यतापृथिवीत्वावच्छिन्ना॥ एवंशीतस्पर्शादि॰
लक्षणेषुजलादीनांलक्ष्यताजलत्वादीनांलक्ष्यतावच्छेदकत्वंबोध्यं॥ एवंपृथिव्यादित्रिकंनिरूप

क्षात्कारकारणत्वे सति इंद्रियत्वं मनसो लक्षणं ॥ इंद्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः ॥ आत्म
नो ज्ञानादिकं प्रति समवायिकारणत्वात् ॥ अतः इंद्रियत्वोपादानं ॥ रूपं लक्षयति ॥ चक्षुरिति ॥ च
क्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वं रूपस्य लक्षणं विशेष्यमात्रोपादाने रसादावतिव्याप्तिः ॥ अतः
चक्षुर्मात्रग्राह्यत्वविशेषणं ॥ तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः ॥ योगुणो यदिंद्रियग्राह्यस्त
न्निष्ठा जातिस्तदिंद्रियग्राह्य इति नियमात् तद्वारणाय विशेष्योपादानं ॥ चक्षुर्मात्रग्राह्यत्वं नाम
चक्षुर्भिन्नेंद्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं ॥ मात्रपदानुपादाने संख्यादिसामान्यगुणेऽतिव्याप्तिः
संख्यादावपि चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्वात् ॥ अतस्तद्वारणाय मात्रपदं ॥ संख्यादे
श्चक्षुर्भिन्नत्वगिंद्रियग्राह्यत्वात् चक्षुर्मात्रग्राह्यत्वं नास्ति अतींद्रियगुरुत्वादावतिव्याप्तिवारणा
य चक्षुर्ग्राह्येति ॥ अत्र लक्षणे ग्राह्यत्वं नाम प्रत्यक्षविषयत्वं ॥ अग्राह्यत्वं नाम तदविषयत्वं ॥ तथा
च त्वक्साक्षात्काराविषयत्वे सति चाक्षुषप्रत्यक्षविषयत्वे सति गुणत्वमिति फलितोऽर्थः ॥ ननु प्र

भावप्रतियोगित्वं ॥ असंभवस्तु ॥ लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वं ॥ आकाशं लक्ष
क्षयति ॥ शब्दगुणकमिति ॥ ५ ॥ गुणपदमाकाशे शब्द एव विशेषगुण इति द्योतनाय ॥ नत्वति
व्याप्तिवारणाय ॥ समवायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात् ॥ तच्चैकमिति ॥ अनेकत्वे मानाभा
वादिति भावः ॥ विभ्विति ॥ सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वं ॥ मूर्तत्वं च क्रियावत्त्वं पृथिव्यप्तेजो
वायुमनांसि मूर्तानि ॥ पृथिव्यप्तेजोवाय्वाकाशादि पंचकं भूतपदवाच्यं भूतत्वं नाम बहिरिंद्रिय
ग्राह्यविशेषगुणवत्त्वं ॥ कालं लक्षयति ॥ अतीतेति ॥ ६ ॥ व्यवहारहेतुत्वस्य लक्षणत्वे व्यवहारहे
तुभूतघटादावतिव्याप्तिस्तद्वारणाय अतीतेति विशेषणोपादानं ॥ दिशो लक्षणमाह ॥ प्राच्येति ॥
उदयाचलसन्निहितायासा दिक्प्राची ॥ मेरोः संनिहिताया दिक्सा उदीची मेरोर्व्यवहिताया दि
क्सा अवाची आत्मानं निरूपयति ज्ञानाधिकरणमिति अधिकरणपदं समवायेन ज्ञानाश्रयत्वला
भार्थं ॥ ९ ॥ मनो निरूपयति ॥ सुखादीति ॥ उपलब्धिर्नाम साक्षात्कारः ॥ तथा च सुखदुःखादिसा

न्या·बो·
४

ध्यः॥ रूपादिचतुष्टयं पृथिव्यां पाकजमिति॥ एतत्तत्त्वनिर्णयश्चेत्थं॥ पाको नाम विजातीयतेजःसंयो
गः॥ स च नानाजातीयः॥ रूपजनको विजातीयतेजःसंयोगः॥ तदपेक्षया रसजनको विजातीयः॥
एवं गंधजनकोपि एवं स्पर्शजनकोपि तथा॥ एवं प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्ष
ण्येन कल्पनीयाः॥ तथाहि॥ तृणपुंजनिक्षिप्ते आम्रादौ उष्णत्वलक्षणविजातीयतेजःसंयोगात्
पूर्वहरितरूपनाशे रूपांतरस्य पीतादेरुत्पत्तिः॥ पूर्वरसस्याम्लस्यैवानुभवात् क्वचित्पूर्वहरितरू
पसत्त्वेपि रसपरावृत्तिर्दृश्यते॥ विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाम्लरसनाशे मधुर
रसस्यानुभवात् तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवांगीकार्यः॥ एवं गंधजनको वि
लक्षण एव॥ रूपरसयोरपरावृत्तावपि पूर्वगंधनाशे विजातीयपाकवशात्सुरभिगंधोपलब्धेः॥ ए
वं स्पर्शजनकोपि पाकवशात् कठिनस्पर्शनाशे मृदुस्पर्शानुभवात् तस्माद्रूपादिजनका विजातीया
एव पाकाः॥ अत एव पार्थिवपरमाणूनामेकजातीयत्वेपि पाकमहिम्ना विजातीयद्रव्यांतरानु

राम·
४

4

भाभित्तिसंयोगेतिव्याप्तिः॥ तस्यचक्षुर्मात्रग्राह्यगुणत्वादितिचेन्न॥गुणपदस्यविशेषगुणपर
त्वात्॥ नचैवंविशेषगुणत्वघटितलक्षणेसंख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति वा
च्यं॥जलमात्रवृत्तिसांसिद्धिकद्रवत्वेऽतिव्याप्तिवारणायतदुपादानात्॥ अथवाचक्षुर्मात्रग्राह्य
जातिमद्गुणत्वस्यलक्षणत्वान्नप्रभाघटसंयोगेरूपलक्षणस्यातिव्याप्तिः॥ संयोगत्वजातेश्चक्षु
र्मात्रग्राह्यत्वाभावात्। घटपटसंयोगस्यत्वगिंद्रियग्राह्यत्वात्तद्गतजातेरपित्वगिंद्रियग्राह्यत्वा
त्॥ अत्रजातिघटितलक्षणेगुणत्वानुपादानेचक्षुर्मात्रग्राह्यजातिमतिसुवर्णादावतिव्याप्तिर
तस्तद्वारणायतदुपादानं॥ एवंरसादिलक्षणेविशेषणानुपादानेलक्ष्यभिन्नगुणादावतिव्या
प्तिः॥ विशेष्यानुपादानेलक्ष्यमात्रवृत्तिरसत्वगंधत्वादावतिव्याप्तिः॥ अतोविशेषणविशेष्य
योरुपादानं॥ स्पर्शलक्षयति त्वगिंद्रियमात्रग्राह्येति॥ अत्रापिमात्रपदंसंख्यादिसामान्यगु
णादावतिव्याप्तिवारणाय अन्यविशेषणकृत्यंपूर्ववद्बोध्यं॥गात्रत्वपदार्थोपि पूर्ववदेवबो

न्या·बो· स्नेहस्यैवासाधारणकारणत्वं ॥ ननुजलादिगलद्द्रवत्वस्य ॥ तथासति द्रुतसुवर्णादिसंयोगेचू
५ र्णादेः पिंडीभावापत्तेः ॥ अतःस्नेहस्यैवासाधारणकारणत्वं ॥ विशेषणमात्रोपादाने कालादावति
व्याप्तिरतस्तद्वारणाय विशेष्योपादानं ॥ वस्तुतस्तु द्रुतजलसंयोगस्यैव पिंडीभावहेतुत्वं ॥ स्नेह
स्य पिंडीभावहेतुत्वे मानाभावात् ॥ जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः ॥१२॥ शब्दं लक्षय
ति ॥ श्रोत्रेति ॥ शब्दत्वेति व्याप्तिवारणाय गुणपदं रूपादावतिव्याप्तिवारणाय श्रोत्रेति ॥ सत्रिविधः ॥
5 संयोगजो विभागजः शब्दजश्चेति ॥ भेरीदंडसंयोगजो मृदंगादशब्दः ॥ वंशे पाट्यमाने दलद्वयवि
भागजश्चटचटशब्दः ॥ शब्दोत्पत्तिमारभ्य श्रोत्रदेशपर्यंतं निमित्तपवनेन शब्दधारा जायते ॥
तत्र उत्तरशब्दे पूर्वशब्दः कारणं ॥ बुद्धेर्लक्षणमाह ॥ सर्वव्यवहारेति ॥ व्यवहारः शब्दप्रयोगः ज्ञा
नं विना शब्दप्रयोगासंभवात् शब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणं ॥ बुद्धिं विभजते
॥ साद्विविधेति ॥ स्मृतिं लक्षयति ॥ संस्कारेति ॥ तथाहि [illegible]पाजन्यत्वविशिष्टसंस्कारजन्यत्वविशिष्ट

भवः यथा गोभुक्ततृणादीनामापरमाण्वंतं भंगे तृणारंभकपरमाणुषु विजातीयतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनंतरं दुग्धे यादृशं रूपादिकं वर्त्तते तादृशरूपरसगंधस्पर्शजनका तेजःसंयोगाज्जायंते ॥ तदुत्तरं तादृशरूपाद्युत्पद्यंते ॥ तादृशरूपादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते ॥ ततः त्र्यणुकादिक्रमेण महादुग्धारंभकैः परमाणुभिरेव दध्यारभ्यते ॥ एवं दध्यारंभकैरेव परमाणुभिर्नवनीतादिकमितिदिक् ॥४॥ विभागं लक्षयति ॥ संयोगेति ॥ संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणं विशेषणमात्रोपादाने क्रियायामपि संयोगनाशकत्वसत्वात्तत्रातिव्याप्तिवारणाय गुणत्वविशेष्योपादानं ॥ गुरुत्वं लक्षयति आद्येति ॥ द्वितीयादिपतनक्रियायां वेगस्यासमवायिकारणत्वात्तत्रातिव्याप्तिवारणायाद्येति ॥ उत्तरत्रस्यंदने आद्यविशेषणमपि पूर्ववदेव योजनीयं ॥ स्नेहं लक्षयति ॥ चूर्णादीति ॥ चूर्णादिपिंडीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणं ॥ पिंडीभावो नाम चूर्णादेर्यो धारणाकर्षणहेतुः संयोगो विलक्षणसंयोगः । तादृशसंयोगे

न्या·बो· शुक्तेरंगरजतयोरिमेरजतरंगे इत्याकारकसमूहालंबनभ्रमेतिव्याप्तिः॥ तत्रापिरजतत्ववद्विशेष्यक
६ त्वरजतत्वप्रकारकत्वयोःसत्वात्॥ रंगविशेष्यकत्वरंगत्वप्रकारकत्वयोश्चसत्वात्।।उक्तनिष्क
र्षेतुदर्शितभ्रमेनातिव्याप्तिः॥समूहालंबनभ्रमस्यरंगांशेरजतत्वावगाहित्वेनरजतांशेरंगत्वाव
गाहित्वेनचरजतत्वप्रकारतायाः रजतत्ववद्विशेष्यतानिरूपितत्वाभावात्॥एवंरंगत्वप्रकारता
याःरंगत्ववद्विशेष्यतानिरूपितत्वाभावाच्चेति॥ अयथार्थानुभवंलक्षयति॥तद्भाववतीति॥अ
6 त्रापिपूर्ववत्तद्भाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपितप्रकारिताशाल्यनुभ
वत्वंविवक्षणीयं॥अन्यथारंगरजतयोरिमेरंगरजतेइत्याकारकसमूहालंबनप्रमायामतिव्याप्तिः॥एतत्स
मूहालंबनस्यरंगरजतोभयविशेष्यकत्वेनरजतत्वरंगत्वोभयप्रकारकत्वेनरजतांशेरजतत्वावगाहित्वेनरंगांशेरं
गत्वावगाहित्वेनरजतत्वप्रकारतायाःरजतत्वाभाववद्रंगविशेष्यतानिरूपितत्वाभावात् एवं राम

रंगत्वप्रकारतायारंगत्वाभाववद्रजतविशेष्यतानिरूपितत्वाभावान्नातिव्याप्तिः॥उदाहरणं॥ ६

ज्ञानत्वं स्मृतेर्लक्षणं ॥ विशेष्यमात्रोपादाने प्रत्यक्षानुभवेतिव्याप्तिः तद्वारणाय विशेषणोपादानं ॥ संस्कारध्वंसेतिव्याप्तिवारणाय विशेष्योपादानं ॥ ध्वंसं प्रति प्रतियोगिनः कारणत्वात् संस्कारध्वंसेपि संस्कारजन्यत्वस्य सत्वात् प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदं ॥ अनुभवं लक्षयति ॥ तद्भिन्नमिति ॥ तद्भिन्नत्वं नाम स्मृतिभिन्नत्वं ॥ स्मृतिभिन्नत्वविशिष्टज्ञानत्वं अनुभवस्य लक्षणं ॥ तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः ॥ विशेष्यानुपादाने घटादावतिव्याप्तिः ॥ अतस्तद्वारणाय विशेषणविशेष्ययोरुभयोरुपादानं ॥ अनुभवं विभजते ॥ स द्विविध इति ॥ यथार्थानुभवं लक्षयति ॥ तद्वतीति ॥ तद्वतीत्यत्र सप्तम्यर्थो विशेष्यकत्वं ॥ तच्छब्देन प्रकारीभूतो धर्मो धर्त्तव्यः ॥ तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणं ॥ उदाहरणं ॥ रजते इदं रजतमिति ज्ञानं ॥ रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वं ॥ तद्भिन्नविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपितप्रकारिताशाल्यनुभवत्वमिति फलितार्थः ॥ अन्यथायथा

न्या·बो· द्रूपदमपिकारणलक्षणेनिवेशनीयं ॥ दंडरूपादीनांतु अन्यथासिद्धत्वात् ॥ कार्यंलक्षयति ॥
७ कार्यमिति ॥ प्रागभावप्रतियोगित्वंकार्यस्यलक्षणं ॥ कार्योत्पत्तेःपूर्वंइहघटोभविष्यतीतिप्रती-
तिर्जायते॥तस्तीतिविषयीभूतोयोऽभावस्तत्प्रतियोगिघटादिरूपंकार्यं॥कारणंविभजते॥कारणं
त्रिविधमिति ॥ समवायिकारणंलक्षयति ॥ यत्समवेतमिति ॥ यस्मिन्समवेतंसत्समवायेनसंब
द्धंसत्कार्यमुत्पद्यतेतत्समवायिकारणमित्यर्थः उदाहरणंयथातंतवइति॥तंतुषुसमवायेनसंब-
द्धंसत्पटात्मकंकार्यमुत्पद्यतेतत्समवायिकारणमित्यर्थः ॥ सामान्यलक्षणंतुसमवायसंबंधावच्छि
न्नकार्यतानिरूपिततादात्म्यसंबंधावच्छिन्नकारणत्वंसमवायिकारणत्वं ॥ समवायसंबंधेनघटा
धिकरणेकपालादौकपालादेः तादात्म्यसंबंधेनैवसत्वात् ॥ समवायसंबंधावच्छिन्नघटत्वावच्छि
न्नकार्यतानिरूपिततादात्म्यसंबंधावच्छिन्नकारणतायाकपालादौसत्वाल्लक्षणसमन्वयः ॥ ज राम·
न्यभावत्वावच्छिन्नप्रतियोगितासमवायसंबंधेनद्रव्यस्यैवहेतुत्वात् ॥ अन्यथावेतुद्रव्यगुणकर्मसुत्रिषु ७

यथा शुक्ताविदं रजतमिति ज्ञानं ॥ यथार्थानुभवं विभजते ॥ यथार्थानुभव इति ॥ तत्करणमिति ॥ फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्य लक्षणं ॥ एकैकप्रमाणलक्षणं तु वक्ष्यते प्रत्यक्षज्ञानेत्यादिना ॥ करणलक्षणमाह ॥ असाधारण मिति ॥ व्यापारवदसाधारणकारणं करणमित्यर्थः असाधारणत्वं च कार्यत्वातिरिक्तधर्मावच्छिन्न कार्यतानिरूपितकारणताशालित्वमित्यर्थः ॥ यथा दंडादेर्घटादिकं प्रत्यसाधारणकारणत्वं ॥ कार्य त्वातिरिक्त घटत्वादिरूपधर्मस्तदवच्छिन्नकार्यता घटे तन्निरूपितकारणता दंडे ॥ अतो घटं प्रति दंडः असाधारणकारणं भवति ॥ भ्रम्यादिरूपव्यापारवत्त्वाच्च करणं ॥ साधारणकारणत्वं कार्यत्वा वच्छिन्नकार्यतानिरूपितकारणताशालित्वं ॥ ईश्वरादृष्टादेः कार्यत्वा वच्छिन्नं प्रत्येव कारणत्वा त्साधारणकारणत्वं ॥ नियतत्वविशेषणानुपादाने पूर्ववर्त्तिनो रासभादेरपि घटादिकारणत्वं स्या त् ॥ अतो नियतेति ॥ नियतपूर्ववर्तिनो दंडरूपादेरपि घटकारणत्वं स्यात ॥ अतः नन्यथासि

गतरूपस्य ॥ सामान्यलक्षणंतुसमवायसंबधावच्छिन्नकार्यतानिरूपितायासमवायस्वसमवा
यिसमवेतत्वान्यतरसंबंधावच्छिन्नाकारणतातदाश्रयत्वं ॥ द्रव्यासमवायिकारणीभूतावयवसं
बंधेतुसमवायसंबंधावच्छिनघटत्वावच्छिन्नकार्यतानिरूपितसमवायसंबंधावच्छिन्नाकपाल
द्वयसंयोगत्वावच्छिन्नाकारणताकपालद्वयसंयोगेवर्त्तते ॥ एवंआद्यपतनक्रियायांआद्यस्यंदन
क्रियायांचगुरुत्वद्रवत्वेअसमवायिकारणेभवतः आद्यपतनक्रियांप्रतिआद्यस्यंदनक्रियांप्रति
चतयोः समवायसंबंधेनैवकारणत्वात् अवयविगुणभूतघटपटरूपादौत्ववयवगुणभूतकपा
लतंतुरूपादेः स्वपदग्राह्यकपालतंतुरूपादिसमवायिकपालतंत्वादिसमवेतत्वसंबंधेनैवका
रणत्वात्तत्संबंधावच्छिन्नकारणताश्रयत्वंअवयवगुणभूतकपालरूपतंतुरूपादौवर्ततइतिल
क्षणसंगतिः ॥ निमित्तकारणंलक्षयतितदुभयभिन्नमिति ॥ समवायिकारणभिन्नत्वेसतिअस
मवायिकारणभिन्नत्वेसतिकारणत्वंनिमित्तकारणस्यलक्षणमित्यर्थः ॥ कारणलक्षणमुपसंहर

द्रव्यमेवसमवायिकारणंद्रव्येअवयवाःसमवायिकारणं॥ अतोगुणादावपिद्रव्यमेवसमवायि
कारणमित्याशयेनाहपटश्चस्वगतरूपादेरिति॥समवायिकारणमित्यनुषज्यते॥असमवायिका
रणंलक्षयतिकार्येणेति ॥असमवायिकारणंद्विविधं॥ कार्येणसहैकस्मिन्नर्थेसमवेतंसत्यत्कार
णंतदसमवायिकारणमित्यर्थः॥कारणेनसहैकस्मिन्नर्थेसमवेतंसत्कारणसमवायिकारणमित्य
परमित्यर्थः॥ अत्रकारणेनेत्यस्यस्वकार्यसमवायिकारणेनेत्यर्थः ॥जन्यद्रव्यमात्रेअवयवसंयोग
स्यैवासमवायिकारणत्वात्पटात्मककार्येतदवयवतंतुसंयोगस्यैवासमवायिकारणत्वंदर्शयन्नाद्य
मुदाहरति।। यथातंतुसंयोगःपटस्येति॥ पटात्मककार्येणसहैकस्मिन्नर्थेतंतौसमवायसंबंधे
नविद्यमानत्वेसतिकारणत्वात्पटात्मककार्यंप्रतितंतुसंयोगोऽसमवायिकारणमित्यर्थः॥द्वितीयमु
दाहरति॥तंतुरूपमिति ॥कारणेनस्वकार्यकारणीभूतपटेनसहएकस्मिन्नर्थेतंतौसमवेतंसत्सम
वायसंबंधेनवर्त्त [illegible] कारणंतंतुरूपंपट

न्या॰बो॰ क्षेजननीयेइंद्रियव्यापारता बोध्या ॥ मानसप्रत्यक्षेतु आत्ममनःसंयोगस्यैव सा बोध्या ॥ प्रत्य
९ क्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह ॥ ज्ञानाकरणमिति ॥ प्रत्यक्षप्रमालक्षणं ॥ व्याप्ति
ज्ञानंसादृश्यज्ञानंपदज्ञानंच तदेवकरणंयेषांते अनुमित्युपमितिशाब्दाः तद्भिन्नत्वंप्रत्यक्षस्य ॥
प्रत्यक्षे इंद्रियस्यैवकरणत्वंनतु ज्ञानस्यकरणत्वं इदंलक्षणमीश्वरप्रत्यक्षसाधारणं ॥ ईश्वरप्र
त्यक्षस्याजन्यत्वात् जन्यप्रत्यक्षस्यैवलक्षणाभिप्रायेणोत्तरमाह ॥ इंद्रियार्थसन्निकर्षेति ॥ जन्यप्र
त्यक्षस्यैवलक्षणत्वाभिप्रायेणेदंलक्षणंविभजते ॥ निर्विकल्पकमिति ॥ तल्लक्षयति ॥ निष्प्रकारकमिति
प्रकारताशून्यज्ञानत्वमेवनिर्विकल्पकत्वमित्यर्थः निर्विकल्पकेचतुर्थविषयतास्वीक्रियते ॥ त्रिविध
विषयतामध्येएकापितत्रनास्त्यतोविशेष्यताशून्यज्ञानत्वंसंसर्गताशून्यज्ञानत्वमित्यपिलक्ष
णंसंभवति ॥ सविकल्पकंलक्षयति ॥ सप्रकारकमिति ॥ विषयतायाज्ञाननिरूपितत्वाद्ज्ञानस्य राम॰
विषयतानिरूपकत्वेन [illegible] विशेष्यतानिरूपक ९

ति॥ तदेतदिति॥ यदसाधारणमिति॥ व्यापारवत्त्वे सतीत्यपि पूरणीयं॥ अन्यथा तंतुकपालसंयोगयोरतिव्याप्तिः॥ तंतुकपालसंयोगयोरपि कार्यत्वातिरिक्तपटत्वघटत्वावच्छिन्नं प्रतिकारणत्वमस्त्येवेति अतस्तत्र करणत्ववारणाय व्यापारवत्त्वे सतीति करणलक्षणे विशेषणं देयं॥ व्यापारवत्त्वं तज्जन्यत्वे सति तज्जन्यजनकत्वं॥ भवति हि दंडजन्यत्वे सति दंडजन्यघटजनकत्वाद्भ्रम्यादेरतो दंडव्यापारत्वं॥ एवं कपालतंतुसंयोगादेरपि कपालतंतुव्यापारत्वं॥ कपालतंतुजन्यत्वे सति कपालतंतुजन्यघटपटजनकत्वात्॥ करणलक्षणे ऽसाधारणत्वानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्त्वात्करणत्वं स्यात् तन्नातिव्याप्तिवारणायासाधारणेति विशेषणं॥ षड्विधेंद्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह॥ तत्रेति॥ प्रमाभूतेषु प्रत्यक्षात्मकं ज्ञानं चाक्षुषादिप्रत्यक्षं तत्प्रति व्यापारवदसाधारणकारणमिंद्रियं भवति॥ अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणं॥ आद्यसन्निकर्षातिरिक्तचतुर्विधसन्निकर्षाणां समवायरूपत्वेन इंद्रियजन्यत्वाभावाद्व्यापारत्वं न संभवति॥ इंद्रियमनःसंयोगस्य च बाह्यप्रत्य

न्या·बो· मवेतरूपत्वादिप्रत्यक्षे मनःसंयुक्तसमवेतसमवेतसमवायस्य हेतुता॥ रसनघ्राणयोस्तु रसगंधतद्गतजा
१० तिग्राहकत्वेन द्वितीयतृतीययोः संन्निकर्षयोरेव रसगंधादिहेतुता वाच्या॥ श्रवणेंद्रियस्याकाशरूप
त्वेन शब्दस्याकाशगुणत्वेन श्रवणेंद्रियेण च समं शब्दस्य समवायः सन्निकर्षः॥ शब्दवृत्तिशब्दत्व
कत्वादिजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता॥ अभावप्रत्यक्षहेतुर्विशेषणवि
शेष्यभावो नाम विशेषणता सन्निकर्षः॥ पंचसंनिकर्षेषु मध्ये संयोगस्थाने संयुक्तपदं घटयित्वा सम
10 वायस्थाने समवेतपदं घटयित्वा अभावस्थले निर्वाह्यं॥ तथाहि॥ द्रव्याधिकरणकाभावप्रत्यक्षे सं
युक्तविशेषणता॥ द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता॥ द्रव्य
समवेतसमवेताधिकरणकाभावप्रत्यक्षे इंद्रियसंयुक्तसमवेतसमवेतविशेषणता॥ तत्र घटे पटत्वा
भावः संयुक्तविशेषणतया गृह्यते॥ घटसमवेतघटत्वादौ पृथिवीत्वाभावः संयुक्तसमवेतविशेष राम·
णतया गृह्यते॥ घटसमवेतसमवेतघटत्वत्वादौ नीलत्वाभावश्च संयुक्तसमवेतसमवेतविशेषणत १०

ज्ञानत्वंसंसर्गतानिरूपकज्ञानत्वमित्यपिलक्षणंसंभवति॥उदाहरणंयथेति॥इदंत्वावच्छिन्न
विशेष्यतानिरूपकंडित्थत्वप्रकारकज्ञानंसविकल्पकमित्यर्थः॥चाक्षुषादिप्रत्यक्षकारणीभू
तान्षड्विधसंन्निकर्षान्विभजते॥संयोगइत्यादिना॥द्रव्यवृत्तिलौकिकविषयतासंबंधेनचाक्षु
षत्वावच्छिन्नंप्रतिचक्षुःसंयोगःकारणं॥द्रव्यसमवेतवृत्तिलौकिकविषयतासंबंधेनचाक्षुषत्वाव
च्छिन्नंप्रतिचक्षुःसंयुक्तसमवायस्यहेतुत्वं॥द्रव्यग्राहकाणींद्रियाणित्रीण्येव॥चक्षुस्त्वङ्मनां
सि॥अन्यानिघ्राणरसनश्रवणानिगुणग्राहकाणि॥अतस्त्वगिंद्रियस्थलेद्रव्यवृत्तिलौकिकवि
षयतासंबंधेनत्वाचप्रत्यक्षत्वावच्छिन्नंप्रतित्वक्संयोगस्यहेतुता॥एवंद्रव्यसमवेतत्वाचप्र
त्यक्षत्वावच्छिन्नंप्रतित्वक्संयुक्तसमवायस्यहेतुता॥द्रव्यसमवेतसमवेतोष्णत्वशीतत्वा
दिजातिस्पर्शनप्रत्यक्षेसंयुक्तसमवेतसमवायस्यहेतुता॥एवमात्ममानसप्रत्यक्षेमनःसंयो
गस्यहेतुता॥आत्मसमवेतसुखादिप्रत्यक्षेमनःसंयुक्तसमवायस्यहेतुता॥आत्मसमवेतस

न्या·बो· सेनसमस्यमानपदार्थयोरभेदसंसर्गलाभाच्च व्याप्तिप्रकारकाभिन्नंयत्पक्षसंबंधविषयकज्ञानंतत्प
११ रामर्श इति लभ्यते॥ एवंसति धूमोवन्हिव्याप्यः आलोकवान्पर्वत इत्याकारकसमूहालंबनेप्युक्त
परामर्शलक्षणमस्तीत्यतिव्याप्तिस्तद्वारणाय पक्षनिष्ठविशेष्यतानिरूपितहेतुनिष्ठप्रकारतानिरूपि
तव्याप्तिनिष्ठप्रकारतानिरूपितप्रकारिताशालिज्ञानंपरामर्श इति निष्कर्षः कर्तव्यः॥ एतादृशपराम
र्शजन्यत्वेसतिज्ञानत्वमनुमितेर्लक्षणं॥ अनुमितिपरामर्शयोर्विशिष्यकार्यकारणभावश्चेत्थं॥ वह्नि-
त्वावच्छिन्नसंयोगसंबंधावच्छिन्नविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताशाल्यनुमितित्वावच्छिन्नंप्रतिवह्नि
त्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारतानिरू
पितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यिताशालिनिर्णयःकारणं॥ वन्हित्वावच्छिन्नप्रका
रतानिरूपितव्याप्तित्वावच्छिन्नविशेष्यतायाः धूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तित्वावच्छि राम·
न्नप्रकारतायाश्चाभेद [illegible] न्हित्वावच्छिन्नप्रकारतानिरूपितसाध्यविशेष्यत्वावच्छिन्नव्या ११

याग्रह्यतइतिसंक्षेपः ॥ इतिप्रत्यक्षपरिच्छेदःसमाप्तः॥ अनुमानंलक्षयति ॥ अनुमितिकरणमि
ति॥ अनुमितौव्याप्तिज्ञानंकरणं ॥ परामर्शोव्यापारः ॥ अनुमितिः फलं॥ परामर्शस्यव्याप्तिज्ञानज
न्यत्वेसतिव्याप्तिज्ञानजन्यानुमितिजनकत्वात् तज्जन्यत्वेसतितज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नं।अनुमि
तिकरणत्वमनुमानस्यलक्षणं।।अनुमानंव्याप्तिज्ञानंएतस्यपरामर्शरूपव्यापारद्वाराअनुमिति
प्रत्यसाधारणकारणतयाअनुमितिकरणत्वमुपपन्नं॥परामर्शजन्यमिति ॥परामर्शजन्यत्वविशि
ष्टज्ञानत्वमनुमितेर्लक्षणं॥ अत्रज्ञानत्वमात्रोपादानेप्रत्यक्षादावतिव्याप्तिरतस्तद्वारणायपराम
र्शजन्यत्वेसतीतिविशेषणोपादानं।परामर्शजन्यत्वमात्रोक्तौपरामर्शध्वंसेतिव्याप्तिरतस्तद्वारणा
यज्ञानत्वोपादानं॥ अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे॥व्याप्तिविशिष्टेति॥ व्याप्ति
विशिष्टंचतत्पक्षधर्मताज्ञानंचेतिकर्मधारयः ॥अत्रविशिष्टपदस्यप्रकारतानिरूपकपरत्वात्पक्षधर्म
तायाज्ञानमित्यत्रषष्ठ्याविषयत्वबोधनात् ॥धर्मतापदस्यसंबंधार्थकत्वात् ॥कर्मधारयसमा

त्वंवन्हौवर्तते॥ तथाचधूमव्यापकवन्हिसामानाधिकरण्यंव्याप्तिरितिफलितं॥ इतीयमन्वयव्याप्तिः
सिद्धांतानुसारेण॥ पूर्वपक्षव्याप्तिस्तुसाध्याभाववदवृत्तित्वं॥ साध्यतावच्छेदकसंबंधावच्छिन्नसा
ध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकसंबंधावच्छिन्नप्रतियोगितावच्छेद
कावच्छिन्नवैय्यधिकरण्यावच्छिन्नाभाववन्निरूपितहेतुतावच्छेदकसंबंधावच्छिन्नवृत्तित्वत्वा
वच्छिन्नप्रतियोगिताकाभावोव्याप्तिरित्यर्थः॥ तच्चकेवलान्वयिन्यव्याप्तमितिसिद्धांतानुसरणं॥अ
नुमानंविभजते॥स्वार्थमिति॥स्वार्थानुमानंनामन्यायाप्रयोज्यानुमानं॥ तत्प्रयोज्यानुमानंपरा
र्थानुमानं॥ न्यायत्वंचप्रतिज्ञाद्यवयवपंचकसमुदायत्वं॥ अवयवत्वंचप्रतिज्ञाद्यन्यतमत्वं॥ अ
न्वयेनेति॥साध्यसामानाधिकरण्यरूपान्वयव्याप्तिमानित्यर्थः॥ व्यतिरेकेणेति॥ व्यतिरेकोना
माभावः॥ तथाचसाध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः॥ अयंचहेतुर्यत्रयत्रवन्ह्यभा राम·
वस्तत्रधूमाभावइति॥ [illegible] धूमाभावग्रहणेयावत्त्वस्यव्याप १२

त्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वाव
च्छिन्नविशेष्यतानिरूपितविशेष्यिताशालिनिर्णयः कारणमितिवाच्यं॥ स च निर्णयः वन्हिव्याप्य
धूमवान्पर्वत इत्याकारको बोध्यः यत्र यत्रेति॥ यत्रपदवीप्सा धूमाधिकरणे यावति वन्हिमत्त्वलाभा
य॥ यावत्त्वमहिम्ना वन्हेर्धूमव्यापकत्वं लब्धं॥ तथा च धूमव्यापकवन्हिर्धूमवतीत्यर्थः॥ तदेव स्प
ष्टयति॥ साहचर्यनियम इति॥ नियतसाहचर्यं व्याप्तिरित्यर्थः॥ नियतत्वं व्यापकत्वं॥ साहचर्यं सामा
नाधिकरण्यं॥ तथा च धूमनियतवन्हिसामानाधिकरण्यं व्याप्तिरित्यर्थः॥ वन्हेर्धूमव्यापकत्वं च धूमस
मानाधिकरणात्यंताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं॥ तथाहि॥ धूमाधिकरणे चत्वरमहानसादौ
वर्तते योऽभावः घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावः न तु वन्हित्वावच्छिन्नप्रतियोगिताकाभावः
॥ कुतः चत्वरमहानसादौ वन्हेः सत्त्वात्॥ एवं सति धूमाधिकरणे पर्वतचत्वरादौ वर्तमानस्य घटाद्य
भावस्य प्रतियोगितावच्छेदकं घटत्वादिकमनवच्छेदकं वन्हित्वं तद्वत्त्वं वन्हौ वर्तते। अतो धूमव्यापक

तिरेकित्वं ॥ यथेति। अत्र पृथिवीत्वावच्छिन्नं पक्षः ॥ पृथिवीतरजलादिभेदः साध्यं ॥ गंधवत्त्वं हेतुः ॥
अत्र यद्गंधवत्तदितरेभ्यो भिद्यते यथेत्यन्वयदृष्टांताभावाद्गंधव्यापकेतरभेदसामानाधिकरण्यरू-
पान्वयव्याप्तिग्रहासंभवः ॥ किंतु यत्र यत्र पृथिवीतरभेदाभावस्तत्र गंधाभावो यथा जलादिकमिति
व्यतिरेकदृष्टांते जलादावितरभेदाभावरूपसाध्याभावव्यापकता गंधाभावे गृह्यते ॥ इममेवार्थं मनसि
निधाय यदितरेभ्यो न भिद्यते न तद्गंधवद्यथा जलमिति ग्रंथेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शित-
वान् ॥ एवं प्रकारेण व्यतिरेकव्याप्तिग्रहानंतरमितरभेदाभावव्यापकीभूताभावप्रतियोगिगंधवती
पृथिवीत्याकारकव्यतिरेकपरामर्शात्पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नवि-
धेयताका पृथिवी इतरभेदवतीत्याकारकानुमितिर्जायत इति तत्त्वं ॥ यथाश्रुतमूलार्थस्तु यज्जलं
इतरेभ्यो न भिद्यते इतरभेदाभाववत् न तद्गंधवत् जलमितरभेदाभावव्यापकगंधाभाववत् ॥ नचे- राम
यं तथा ॥ इयं पृथिवी ॥ न तथा ॥ गंधाभाववती न ॥ किंतु तदभावात्मकगंधवती ॥ तस्मान्न तथा ॥ १२

13

कत्वपरतया धूमाभावे वन्ह्यभावव्यापकत्वं लभ्यते ॥ वन्ह्यभावे धूमाभावव्यापकत्वं लभ्यते वन्ह्यभावनिष्ठव्या
प्यत्वं च स्वाश्रयवन्ह्यभावव्यापकीभूताभावप्रतियोगित्वसंबंधेन धूमनिष्ठतया गृह्यत इति ॥ व्यतिरेकव्याप्ति
मत्त्वेनान्वयव्याप्तिमत्त्वेन चान्वयव्यतिरेकित्वेन च गीयते ॥ व्यतिरेकपरामर्शाकारश्च वन्ह्यभावव्यापकीभू
ताभावप्रतियोगिधूमवानिति ॥ केवलान्वयिनो लक्षणमाह ॥ अन्वयेति ॥ व्यतिरेकव्याप्तिशून्य
त्वे सत्यन्वयव्याप्तिमत्त्वं केवलान्वयित्वं ॥ अथवा केवलान्वयिसाध्यकत्वं तत् ॥ एतच्च लक्षणं हेतो
र्व्यतिरेकित्वेऽपि संगच्छते ॥ साध्यस्य केवलान्वयित्वादेवान्वयव्याप्तेरभावादन्वयमात्रव्याप्तिकं
केवलान्वयीति मूलोक्तलक्षणमुपपन्नं ॥ अत्यंताभावाप्रतियोगित्वं केवलान्वयित्वं ॥ नन्वेवमा
काशाभावे संयोगाभावे चाव्याप्तिरिति वाच्यं ॥ स्वविरोधिवृत्तिमदत्यंताभावाप्रतियोगित्वस्यै
व तदर्थत्वात् ॥ तथा च तयोरेकजातीयसंबंधेन सर्वत्राविद्यमानत्वान्नाव्याप्तिः ॥ केवलव्यतिरे
किणो लक्षणमाह ॥ व्यतिरेकेति ॥ निश्चितान्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्य

न्या·बो· भिचारविरोधप्रतिपक्षासिद्धिबाधाः ॥ एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसंबंधेनैतद्विशिष्टा
१४ हेतवइत्यर्थः ॥ यद्विषयकत्वेनज्ञानस्यानुमितितत्कारणान्यतरप्रतिबंधकत्वंतत्त्वंदोषसामान्यस्यल
क्षणं ॥ हेतौदोषज्ञानेसत्यनुमितिप्रतिबंधस्तत्कारणप्रतिबंधोवाजायतेऽतोवानिग्रहार्थंवादिनो
ज्ञाविते हेतौदोषोद्भावनार्थंदुष्टनिरूपणमिति भावः ॥ सव्यभिचारंविभज्यदर्शयति ॥ साधारणेति ॥
साधारणाद्यन्यतमत्वंसव्यभिचारसामान्यलक्षणं ॥ साधारणत्वंसाध्याभाववद्वृत्तित्वं ॥ पर्वतोवह्नि
14 मान्प्रमेयत्वादिति ॥ अत्रप्रमेयत्वहेतौवन्ह्यभाववद्वृत्तित्वरूपव्यभिचारेज्ञातेवन्ह्यभाववद्वृत्ति
त्वरूपव्याप्तिज्ञानप्रतिबंधःफलं ॥ असाधारणइति ॥ सर्वसपक्षविपक्षव्यावृत्तत्वं ॥ साध्यवद्वृत्ति
त्वतावच्छिन्नप्रतियोगिताकाभावः हेतौसाध्यवद्वृत्तित्वेनिश्चितेसाध्यवद्वृत्तित्वरूपव्याप्तिज्ञान
प्रतिबंधःफलं ॥ अनुपसंहारिणंलक्षयति ॥ अन्वयेति ॥ उभयदृष्टांताभावादन्वयव्याप्तिज्ञानव्यतिरे राम·
कव्याप्तिज्ञानोभयसामग्रीनास्तीत्यर्थः ॥ किंचिद्विशेष्यकनिश्चयसामान्यस्य[illegible]कासेसतिकिंचिद्विशे १४

तस्मात् ॥ गंधाभावाभाववत्त्वात् गंधवत्त्वात् ॥ नतथा ॥ इतरभेदाभाववत्वेन ॥ किंतु इतरभेदाभावा
भाववती इतरभेदवतीति पर्यवसन्नम् इति ॥ पक्षलक्षणमाह ॥ संदिग्धेति ॥ साध्यप्रकारकसंदेहविशे
ष्यत्वं पक्षत्वं ॥ संदेहश्च पर्वतो वन्हिमान्नवेत्याकारकः ॥ इदं च लक्षणं अनुमितेः पूर्वं साध्यसंदेहो नि-
यमेन जायत इत्यभिप्रायेण प्राचीनैः कृतं ॥ गगनविशेष्यकमेघप्रकारकसंदेहाभावदशायामपि गृह
मध्यस्थपुरुषस्य घनगर्जितश्रवणेन गगनं मेघवदित्याकारक गगनत्वावच्छिन्नोद्देश्यता निरूपित
मेघत्वावच्छिन्नविधेयताकानुमितिदर्शनात् प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्व
मिति स्थिरीकृतं ॥ सपक्षलक्षणमाह ॥ निश्चितेति ॥ साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वं ॥ निश्च
यश्च महानसं वन्हिमदित्याकारकः ॥ विपक्षलक्षणमाह ॥ निश्चितसाध्याभाववानिति ॥ साध्याभाव
प्रकारकनिश्चयविशेष्यत्वं विपक्षत्वं ॥ निश्चयश्च ह्रदो वन्ह्यभाववानित्याकारकः ॥ सद्धेतून्निरूप्य
हेत्वाभासान्निरूपयति ॥ सव्यभिचारेति ॥ हेतुवदाभासंत इति हेत्वाभासाः दुष्टहेतवः ॥ दोषाश्चव्य

न्या·बो· भाववविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शप्रतिबंधःफलं॥ व्याप्यत्वासिद्ध इति॥
१५ प्रकृतेधूमव्यापकत्वमार्द्रेंधनेगृहीतंचेत्धूमेआर्द्रेंधनसंयोगव्याप्यत्वंगृह्यते॥एवंवन्हेरव्यापक-
त्वमार्द्रेंधनसंयोगेगृहीतंचेद्वन्हौतदव्याप्यत्वंगृह्यतेतदेवव्यभिचरितत्वं॥ अर्थादुपाधिव्यभि-
चरितत्वंसाधनेगृहीतंचेदुपाधिभूतार्द्रेंधनसंयोगव्याप्यधूमव्यभिचरितत्वंगृह्यतएव॥अनु-
मानप्रकारश्चपूर्वानुमानेहेतुंपक्षीकृत्यवह्निर्धूमव्यभिचारीधूमव्यापकार्द्रेंधनसंयोगव्यभिचरितत्वात्घटत्वा-
15 दिवत् योयद्व्यापकव्यभिचारीसर्वोपितद्व्यभिचारीतिबोध्यः॥एवंप्रकारेणप्रकृतानुमानहेतुभूतपक्षेसाध्यव्यभि-
चारोत्थापकतयादूषकत्वमुपाधेःफलं॥तथाचधूमाभाववद्वृत्तित्वाभावरूपधूमव्यभिचारेगृहीतेवह्नौधूमाभाववद्वृत्ति-
त्वरूपव्याप्तिज्ञानप्रतिबंधःफलं॥नचव्याप्यत्वासिद्धेर्व्यभिचाराभेदइतिवाच्यं॥धूमाभाववद्वृत्तित्वाभावाभावत्वेनव्याप्य-
त्वासिद्धत्वंधूमाभाववद्वृत्तित्वेनव्यभिचारत्वमितिभेदात्।यस्येति।यस्यहेतोःसाध्याभावःसाध्यबाधः॥प्रमा- राम·
णांतरेणप्रत्यक्षप्रमाणेनपक्षेनिर्णीतः सबाधितइत्यर्थः तथाचप्रात्यक्षिकसाध्यबाधनिश्चयेजा १५

प्यकनिश्चयाविषयसाध्याभावकत्वमेवानुपसंहारित्वं ॥ एतज्ज्ञानस्य व्याप्तिसंशयजननद्वाराव्या
प्तिज्ञानप्रतिबंधः फलमिति भावः ॥ वस्तुतस्तु अत्यंताभावाप्रतियोगिसाध्यकत्वमेवानुपसंहारित्व
मिति बोध्यं ॥ विरुद्धं लक्षयति ॥ साध्याभावव्याप्त इति ॥ साध्याभावव्याप्तिः साध्याभावनिरूपित
व्यतिरेकव्याप्तिः साध्यव्यापकीभूताभावप्रतियोगित्वं ॥ तथा च पक्षविशेष्यकसाध्याभावव्याप्यहे
तुप्रकारकज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबंधः फलं ॥ एवं सत्प्रतिपक्षेपि ॥ वि
रुद्धसत्प्रतिपक्षयोर्विशेषस्तु हेतोरेकत्वेन हेतोर्द्वित्वेन च ज्ञानव्यः ॥ साध्याभावव्याप्यप्रकृतहेतुर्वि
रोधः ॥ साध्याभावव्याप्यप्रतिहेतुमत् पक्षः सत्प्रतिपक्ष इति यावत् ॥ विरुद्धे साध्याभावसाधको हेतुः
साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि ॥ आश्रयासिद्ध इति ॥ पक्षे पक्षतावच्छेदकवि
रहआश्रयासिद्धिः ॥ यथेति ॥ अत्रारविंदे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविंदे सौर
भ्यानुमितिप्रतिबंधः फलं ॥ स्वरूपासिद्ध इति ॥ स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः ॥ तथा च हेत्व

न्या॰बो॰ १६ 16

रः॥वाक्यार्थज्ञानंशाब्दबोधःफलं॥वृत्तिर्नामशक्तिलक्षणान्यतररूपा॥शक्तिर्नामघटादिपदजन्यबोधविषयत्व
प्रकारकेश्वरसंकेतः॥ईश्वरसंकेतोनामईश्वरेच्छा॥सैवशक्तिरित्यर्थः॥शक्तिनिरूपकत्वमेवपदेशक्तत्वंविषय
तासंबंधेनशक्त्याश्रयत्वमर्थेशक्यत्वं॥शक्यसंबंधोलक्षणा॥साद्विविधा॥गौणीशुद्धाचेति॥गौणीनामसादृश्यवि
शिष्टेलक्षणा यथासिंहोमाणवकइत्यादौ॥सिंहपदस्यसिंहसादृश्यविशिष्टेलक्षणा॥शुद्धात्रिविधा॥जहल्लक्षणा॥अज
हल्लक्षणा॥जहदजहल्लक्षणाचेति॥लक्ष्यतावच्छेदकरूपेणलक्ष्यमात्रबोधप्रयोजिकालक्षणा जहल्लक्षणा॥य
थागंगायांघोषइत्यत्रगंगापदशक्यप्रवाहसंबंधस्यतीरेसत्त्वात्तादृशशक्यसंबंधरूपलक्षणाज्ञा
नाद्गंगापदात्तीरोपस्थितिः॥लक्ष्यतावच्छेदकरूपेणलक्ष्यशक्योभयबोधप्रयोजिकालक्षणाअ
जहल्लक्षणा॥यथाकाकेभ्योदधिरक्ष्यतामित्यत्रकाकपदस्यदध्युपघातकेलक्षणा॥लक्ष्यतावच्छे
दकंदध्युपघातकत्वंतेनरूपेणदध्युपघातकानांसर्वेषांकाकबिडालकुक्कुरादीनांशक्यलक्ष्याणांबो राम
धात्॥शक्यतावच्छेदकपरित्यागेनलक्षितान्वयबोधप्रयोजिकाजहदजहल्लक्षणा॥यथातत्त्वमसी॰ १६

तेसाध्यानुमितिप्रतिबंधः फलं ॥ बाधितसाध्यकत्वाद्बाधितहेतुरित्युच्यते॥ इत्यनुमानपरिच्छेदः स
माप्तः॥ ॥उपमानंलक्षयति॥ उपमितिकरणमिति॥उपमितिंलक्षयति ॥संज्ञासंज्ञीति॥ संज्ञानाम
पदं॥संज्ञी अर्थः॥ तयोःसंबंधःशक्तिः॥ तथाचपदपदार्थसंबंधज्ञानमुपमितिरित्यर्थः॥उपमानं
नामातिदेशवाक्यार्थज्ञानं॥अतिदेशवाक्यार्थस्मरणंव्यापारः॥उपमितिःफलं॥ गोसदृशोगवयपद
वाच्यइत्याकारकवाक्याद्गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकंयज्ज्ञानंजाय
तेतदेवकरणं॥ ॥इत्युपमानपरिच्छेदःसमाप्तः॥ शब्दंलक्षयति॥आप्तेति॥आप्तोच्चरितत्वेसति
वाक्यत्वंलक्षणं॥प्रमाणशब्दत्वंलक्ष्यतावच्छेदकं॥वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येतिव्या
प्तिरतआप्तोच्चरितत्वनिवेशः तावन्मात्रोक्तौजवगडदशादावतिव्याप्तिरतोवाक्यत्वं॥ आप्तत्वं
चप्रयोगहेतुभूतयथार्थज्ञानवत्त्वं॥ तथाचप्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यव
सन्नोर्थः ॥वाक्यंलक्षयति॥ ... पस्थितिर्व्याप

न्या·बो· यथार्थानुभवनिरूप्यायथार्थानुभवं विभजते ॥ संशयेत्यादिना ॥ एकेति ॥ एकधर्मावच्छिन्नविशेष्य
१७ कभावाभावप्रकारकज्ञानं संशय इत्यर्थः ॥ भावद्वयकोटिकसंशयाप्रसिद्धेः स्थाणुर्नवेत्यादेः स्थाणुत्व
स्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिकसंशय एवार्थः ॥ मिथ्याज्ञानमिति ॥ अयथार्थज्ञानमि
त्यर्थः ॥ विपर्ययो नाम भ्रमः व्याप्यारोपेणेति ॥ तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणं ॥
अन्यथेष्टापत्तिदोषेण तर्कानुत्पत्तेः ॥ सुखं निरूपयति ॥ सर्वेषामिति ॥ इतरेच्छाऽनधीनेच्छाविष
17 यत्वमिति निष्कर्षः यथाश्रुते घटोऽनुकूल इत्याकारकानुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादा
वपि सत्वात्तत्रातिव्याप्तिः ॥ सुखेच्छाधीने भोजनादावतिव्याप्तिवारणायेतरेच्छानधीनेतीच्छाविशेष
णं ॥ सुखेच्छा तु सुखत्वप्रकारकज्ञानजन्यैव ॥ दुःखं निरूपयति ॥ प्रतिकूलेति ॥ अत्रापीतरद्वेषान
धीनद्वेषविषयत्वमिति निष्कर्षः ॥ द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिस्तत्रापि द्वेषविषयत्वस राम
त्वादतस्तत्रातिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणं ॥ सर्पजन्यदुःखादौ द्वेषात्सर्पद्वेषद् १७

स्यमसर्वज्ञत्वकिंचिज्ज्ञत्वपरित्यागेन व्यक्तिमात्रबोधनात्तु जहदजहल्लक्षणा॥ इयं च लक्षणा जीव
ब्रह्मणोरैक्यं वदतां वेदांतिनां सिद्धांतरीत्या ॥ आकांक्षेति ॥ अव्यवहितोत्तरत्वादिसंबंधेन यत्पद
प्रकारकज्ञानव्यतिरेकप्रयुक्तो हि यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकां
क्षा॥ यथा घटमित्यादिस्थले ऽव्यहितोत्तरत्वादिसंबंधेनाम्पदं घटपदवदित्याकारकाम्पदविशे
ष्यकघटपदप्रकारकज्ञानसत्त्वे घटीयं कर्मत्वमिति बोधो जायते अम् घट इति विपरीतोच्चारणे तु ता
दृशज्ञानाभावात्तादृशशाब्दबोधो न जायते ऽ तस्मात्तादृशाकांक्षाज्ञानं शाब्दबोधे कारणं॥ अर्थाबाध
इति॥ बाधाभावो योग्यतेत्यर्थः॥ अग्निना सिंचतीत्यत्र सेककरणत्वस्य जलधर्मस्य वन्हौ बाधनि
श्चयसत्वान्न तादृशवाक्याच्छाब्दबोधः॥ सन्निधिं निरूपयति॥ असहोच्चरितानीति॥ असहोच्च
रितानि विलंबोच्चरितानि॥ वैदिकमिति॥ वेदवाक्यमित्यर्थः॥ इदमुपलक्षणं॥ वेदमूलकस्मृत्या
दीन्यपि ग्राह्याणि ॥ लौकिकमिति लोकवाक्यमित्यर्थः॥ इति शब्दपरिच्छेदः समाप्तः॥ ॥

न्या·बो· च्छिन्नंप्रतिदंडज्ञानत्वेनकारणत्वमित्यापतितं॥ दंडप्रकारकबुद्धिर्दंडीपुरुषइत्याकारकबुद्धिस्तत्र
१८ दंडज्ञानंकारणंनहिदंडमजानानः पुमान् दंडीपुरुषइतिप्रत्येति॥ एवंचयत्रायंदंडइतिप्रत्यक्षंजा
तंतदनंतरंदंडीपुरुषइत्याकारकप्रत्यक्षमुत्पन्नं॥ तत्रदंडीपुरुषइत्याकारकप्रत्यक्षेतिव्याप्तिस्तद्धि
स्वाव्यवहितपूर्वक्षणोत्पन्नदंडज्ञानात्मकानुभवजन्यंजनिष्यमाणेदंडीपुरुषइत्याकारकस्मरणे
कारणंचस्मृतिंप्रत्यनुभवस्यकारणत्वात्॥ तथाचानुभवजन्यत्वेसतिस्मृतिहेतुत्वरूपभावनाल
क्षणस्ययथोक्तदंडीपुरुषइत्याकारकानुभवेविद्यमानत्वादतिव्याप्तिरितिचेन्न॥ अत्रब्रूमः॥ अनुभ
वजन्यत्वंअनुभवनिष्ठकारणतानिरूपितकार्यताश्रयत्वंतन्नकारणतायामनुभवत्वावच्छिन्नत्वंनि
वेश्यतेतथाचानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वमनुभवजन्यत्वमितिफलितमते
नोक्तातिव्याप्तिः॥ तथाहि॥ दंडप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपितदंडज्ञाननिष्ठाकारण राम·
तातस्यांदंडानुभवत्वमवच्छेदकं दंडानुभवो हि दंडस्मरणात्प्रागपि दंडप्रकारकबुद्धेरव्यवहितोत्तर तो दंडप्र १८

तिसर्पद्वेषस्यसर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषाजन्यद्वेषविषयत्वरूपलक्षणस्यसर्पद्वेषेनातिव्या
प्तिः ॥ फलेच्छाउपायेच्छांप्रतिकारणमतः फलेच्छावशादुपायेच्छाभवत्येवंफलद्वेषादुपायद्वेषः ॥
धर्माधर्मौनिरूपयति ॥ विहितेत्यादिना ॥ वेदविहितेत्यर्थः ॥ निषिद्धेति ॥ वेदनिषिद्धेत्यर्थः ॥ भावनां
लक्षयति ॥ अनुभवेति ॥ अनुभवजन्यत्वेसतिस्मृतिहेतुत्वंभावनायालक्षणं ॥ अत्रानुभवजन्य
त्वेसतीतिविशेषणानुपादानेआत्ममनःसंयोगेतिव्याप्तिरात्ममनःसंयोगस्यज्ञानमात्रंप्रत्यस
मवायिकारणत्वेनस्मृतिंप्रत्यपिकारणत्वात्तस्तदुपादानं ॥ आत्ममनःसंयोगस्यानुभवजन्यत्वाभा
वान्नातिव्याप्तिः ॥ तावन्मात्रेकृतेऽनुभवध्वंसेतिव्याप्तिः ॥ ध्वंसंप्रतिप्रतियोगिनःकारणत्वेनानुभवध्वं
सस्याप्यनुभवजन्यत्वादतःस्मृतिहेतुत्वोपादानं ॥ अनुभवध्वंसेस्मृतिहेतुत्वाभावान्नातिव्याप्तिः
॥ नन्वत्रविशिष्टबुद्धिंप्रतिविशेषणज्ञानस्यकारणतासकलतांत्रिकमतसिद्धा ॥ यथादंडविशिष्ट
बुद्धिंप्रतिदंडज्ञानंकारणंदंडविशिष्टबुद्धिर्नामदंडप्रकारकज्ञानं ॥ तथाचदंडप्रकारकबुद्धित्वाद

19

स्यांप्रतियोगित्वमवच्छेदकंतत्तद्व्यक्तित्वंचनत्वनुभवत्वमपीतिसिद्धांतादन्यत्रदूषितत्वात्तथाचानु
भवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविरहेणैवातिव्याप्तिवारणसं
भवात्कृतंस्मृतिहेतुत्वविशेषणेनेतिचेन्न॥स्मृतावतिव्याप्तिवारणायैवतद्विशेषणप्रवेशात्तथा
हि स्मृतिंप्रत्यनुभवएवकारणंनतुस्मृतिरप्यतोघटस्मृतित्वावच्छिन्नंप्रतिघटानुभवस्यघटानु
भवत्वेनैवकारणत्वंनतुघटज्ञानत्वेनतथाचघटस्मृतिनिष्ठकार्यतानिरूपितायाघटानुभवनि
ष्ठकारणतातस्यांघटानुभवत्वमवच्छेदकंतेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रय
त्वस्यस्मृतौविद्यमानत्वान्नहिस्मृतिः स्मृतिहेतुरतोनतत्रातिव्याप्तिरित्यलं॥सामान्यंनिरूपय
ति॥नित्यमेकमिति॥नित्यत्वेसत्यनेकसमवेतत्वंसामान्यलक्षणंनित्यत्वानुपादानेसंयोगादाव
तिव्याप्तिः आकाशादावतिव्याप्तिवारणायानेकसमवेतत्वंजलपरमाणुरूपादावतिव्याप्तिरतोऽ
नेकेति॥नित्यद्रव्यवृत्तयइति॥नित्यद्रव्येषुपरमाण्वादिषुवर्तमान  अतएवव्यावर्तकाइतर

कारकबुद्धित्वावच्छिन्नं प्रत्यनुभवस्मरणसाधारणदंडज्ञानत्वेनैव दंडज्ञानस्य कारणतायाः स्वीक
रणीयत्वेन दंडज्ञानत्वस्यैव तदवच्छेदकत्वात्तथा चानुभवत्वावच्छिन्न कारणतानिरूपितकार्यता
श्रयत्वस्य यथोक्तप्रत्यक्षानुभवैः भावान्नातिव्याप्तिः भावनायां लक्षणमिदं वर्त्तते तथाहि अनुभवेनै
व भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवस्यानुभवत्वेनैव कारणतया भावनात्वा
वच्छिन्नकार्यतानिरूपितानुभवनिष्ठाकारणतातस्या अनुभवत्वमवच्छेदकमतोऽनुभवत्वावच्छि
न्नकारणतानिरूपितकार्यताश्रयत्वं भावनायां वर्तत इति नासंभवः नन्वेवं स्मृतिहेतुत्वविशेषणवै
यर्थ्यमापद्यते नह्यनुभवध्वंसेतिव्याप्तिवारणाय प्रागुपात्तं हि यथोक्तानुभवजन्यत्वविवक्षाया
मनुभवध्वंसेतिव्याप्तिः प्रसज्यते तथाहि ध्वंसत्वावच्छिन्नं प्रतिप्रतियोगिनः कारणत्वं प्रतियोगित्वे
नरूपेण तत्तद्ध्वंसत्वावच्छिन्नं प्रति तत्तत्प्रतियोगिव्यक्तेस्तद्व्यक्तित्वेन च कारणत्वमित्येव ध्वंस
प्रतियोगिनोः कार्यकारणभाव [illegible] ध्वंसं प्रति [illegible] कार्यतानिरूपिता [illegible] निष्ठाकारणतात

धावच्छिन्नप्रतियोगिताकाभावत्वंध्वंसप्रागभावयोश्चनसंसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैवतद्वारणेत्रैकालिकेतिस्वरूपाख्यानमेवेतिबोध्यं॥तादात्म्येति अभावत्वप्रकारणायविशेषणं घटाभाववानितिप्रतीतिविषयघटादिवारणायविशेष्यं॥ ननुसादृश्यादीनामतिरिक्तपदार्थानामनिरूपणेनन्यूनतेत्यतआह॥सर्वेषामिति॥तद्भिन्नत्वविशिष्टतद्गतभूयोधर्मरूपसादृश्यस्यापिघटपटादिरूपत्वेननातिरिक्तत्वमेवमन्येषामप्यूह्यं॥ कृष्णावल्लंबितोग्राःपुण्यैर्गोवर्धनस्त — मभ्यर्चयन् विपुलाभीरसभाजनजनितबुधेंद्रस्तवाभिरचनाभिः॥इतितर्कसंग्रहव्याख्या न्यायबोधिन्याख्यासमाप्ता॥७॥ ॥वाराणसीप्रसादस्यनियोगेनप्रयत्नतः॥काशीसंस्कृतमुद्रायामंकितोयंशिलाक्षरैः॥१॥ श्रीकाशीजीमेज्ञानवापीकेपूर्वफाटकपरश्रीविश्वनाथजीकेपास श्रीयुतमहाराजशिवलालदुबेजीइनकेमकानमेकाशीसंस्कृतमुद्रायन्त्रमेछपीजिनकोलेना हैयउन्होनेइसछापेखानेकेकार्यसंपादकश्रीयुत [illegible] कचौरीगली

भेदानुमितिहेतवः नित्यद्रव्यवृत्तित्वरूपपक्षधर्मताप्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः॥ नित्यद्रव्यनिष्ठविशेष्यतानिरूपितैकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं विशेषाणां लक्षणमिति भावः॥ पार्थिवपरमाणौ जलादिभेदानुमापकगंधेति व्याप्तिवारणायैकमात्रवृत्तित्वं भेदविशेषणं॥ घटादौ तदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय निरूपितांतं प्रकारताविशेषणं॥ एते नव्यावर्तका इत्यस्य नित्यद्रव्यविशेष्यकेतरभेदानुमितिप्रयोजका इत्यर्थकतया लक्षणपरत्वेन साफल्येपि नित्यद्रव्यवृत्तय इति विफलमेव स्वरूपाख्यानस्यापि कृतत्वादिति प्रभुक्तं॥ ययोर्मध्य इति॥ यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमयुतसिद्धत्वमित्यर्थः त्रैकालिकेति॥ प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यंताभावस्य लक्षणं॥ ध्वंसप्रागभावान्योन्याभावाकाशाभावादीनां वारणाय यथाक्रमं विशेषणोपादानं॥ तत्तत्तत्संसर्गाभावत्वं तादात्म्यभिन्नसंसं

मेभाईप्रतापसिंहज्जीकेदुकानपरमिलेगी॥ ॥मितीकार्तिकसुक्ल५शनिवासरेसमाप्तोयंग्रंथः॥ संवत्१९३१

21

